श्रीः ।

# तिथिनिर्णयः ।

श्रीराघवाचार्यविरचितः ।

स च

## खेमराज श्रीकृष्णदास

इत्यनेन

मुम्बय्यां

स्वकीये "श्रीवेंकटेश्वर" मुद्रणयंत्रालये

मुद्रयित्वा प्रकाशितः ।

शकाब्दाः १८१९, संवत् १९५४.

श्रीः ।

# अथ तिथिनिर्णयः ।

श्रीगणेशाय नमः ॥ नौमि स्वर्णसवर्णाङ्गीमार्णवीमरुणप्रभाम् ॥ दुर्गां दुर्गतिदुर्गघ्नीं भक्तहृद्दुर्गवासिनीम् ॥ रामकौतुकहेमाद्रिमाधवान्निर्णयामृतम् ॥ वीक्ष्य निर्णयसिन्धुंचस्मृतिदर्पणमादरात् ॥ १ ॥ निर्णयोदन्वतः सारमुक्तोद्धारं करोम्यहम् ॥ राघवो विदुषांप्रीत्यै संक्षेपात्तिथिनिर्णयम् ॥ २ ॥ ॥ तिथिर्द्वेधा ॥ शुद्धा विद्धा च ॥ तत्र शुद्धा संपूर्णत्वान्निर्णयानर्हा ॥ तिथ्यन्तरदूषिता विद्धा ॥ वेधस्तु सायंप्रातस्त्रिमुहूर्तात्मकः ॥ प्रातः कैश्चिद्विमुहूर्तोऽप्युक्तः ॥ तिथिविशेषवेधः ॥ उप

वासातिरिक्ते ॥ नागोद्वादशनाडीभिर्दि
क्पञ्चदशभिस्तथा ॥ भूतोष्टादशनाडी
भिर्दूषयत्युत्तरां तिथिम्॥ इति सर्वकर्म
सु स्वस्वकालव्यापिनी तिथिर्ग्राह्या एक
भक्ते दिनोत्तरदले मध्याह्नव्यापिनी
ग्राह्या ॥ मध्याह्नः पञ्चधा विभक्तदिनतृ
तीयभागः ॥ उभयदिनव्याप्तावव्याप्तौ
च पूर्वेतिमाधवः॥उभयदिनव्याप्त्यभावे
पूर्वा ॥ नक्तव्रते प्रदोषव्यापिनीग्राह्या ॥
अस्तानन्तरं त्रिमुहूर्तः प्रदोषः ॥दिनद्वय
व्याप्तौ परा॥शुक्लप्रतिपत्पराह्णव्यापिनी
ग्राह्या॥तदभावे सायाह्नव्यापिनी ग्राह्ये
तिमाधवः॥ कृष्णप्रतिपत्परा ॥ द्वितीया
कृष्णा पूर्वा शुक्लोत्तरेति हेमाद्रिः॥ परैव
सर्वेति माधवः ॥ तृतीयारम्भातिरिक्ता

परैव ॥ गौरीव्रते शुद्धामपि पूर्वां त्यक्त्वा मुहूर्तमात्रापि परैव ग्राह्या ॥ चतुर्थी गणेशव्रतातिरिक्ता परा ॥ गणेशव्रते तृतीयायुता मध्याह्नव्यापिनी ग्राह्या ॥ परदिने सत्त्वे परा दिनद्वये सत्त्वे पूर्वेति दिवोदासः ॥ दिनद्वये मध्याह्नव्याप्तौ परैवेति माधवः॥ कृष्णाचतुर्थी ॥ संकटाख्या चन्द्रोदयव्यापिनीग्राह्या॥ दिनद्वयेसत्त्वेपूर्वा तदभावे परैव॥पञ्चमी माधवमतेसर्वैव पूर्वा॥कृष्णापूर्वाशुक्लोत्तरेतिहेमाद्रिः॥ नागव्रते परैवेति निर्णयासिन्धौ ॥ षष्ठी स्कन्दव्रतातिरिक्ता परैव॥ सप्तमी पूर्वैव ॥ अष्टमी कृष्णा पूर्वा शुक्लोत्तरा ॥ शिवशक्त्युत्सवे कृष्णा परैव ॥ नवमी सर्वा पूर्वा ॥ दशमी हेमाद्रिमते परा पूर्वा

वा ॥ कृष्णा पूर्वा शुक्लोत्तरेति माधवः ॥ कमलाकरस्तु द्वेऽपि नवमीयुक्ते ग्राह्य इत्याह ॥ नवमीयुता॥सत्त्वे औदयिकी ग्राह्येति निर्णयामृतः ॥ एकादशी द्वेधा शुद्धा विद्धा चेति ॥ तत्र शुद्धा समन्यूनाधिकभेदेन त्रिधा ॥ इयमपि द्वादश्यून समाधिकरूपेण प्रत्येकंत्रिधा॥एवं चनव भेदाःएवमेव विद्धायानव ॥ एवमष्टादश भेदाः ॥ तथाहि॥ शुद्धसमाद्वादशी समा १ शुद्धसमा द्वादशी न्यूना २ शुद्धसमा द्वादश्यधिका ३शुद्धन्यूना समद्वादशिका४शुद्धन्यूना न्यूनद्वादशी ५शुद्धन्यूनाधिकद्वादशी६ शुद्धाधिका समद्वादशी ७ शुद्धाधिकान्यूनद्वाशी८शुद्धाधिकाधिकद्वादशी ९ विद्धसमासमद्वादशी

१० विद्धसमा न्यूनद्वादशी ११ विद्धसमा धिकद्वादशी १२ विद्धन्यूनासमद्वादशी १३ विद्धन्यूनान्यूनद्वादशी १४ विद्धन्यूनाधिकद्वादशी १५ विद्धाधिका समद्वादशी १६ विद्धाधिका न्यूनद्वादशी १७ विद्धाधिकाधिकद्वादशी १८ ॥ तत्रादौ वैष्णवनिर्णयः॥ सूर्योदयात्पूर्वं द्विमुहूर्तां प्रविष्टैकादशी शुद्धा ॥ अन्यथा विद्धा ॥ षट्पञ्चाशद्धटिकानन्तरं कलयापि दशमीप्रवेशे विद्धा ॥ विद्धा सर्वथैव त्याज्या ॥ शुद्धा भेदेषु तृतीयषट्सप्तमाष्टमनवमपक्षेषु परैवोपोष्या ॥ अन्येषु पूर्वेति माधवकमलाकरयोर्मतम् ॥ ॥ अथ स्मार्तानाम्॥ सूर्योदये दशमीसद्भावे विद्धान्यथा शुद्धा ॥ शुद्धाभेदेषु शुद्धसमा

दिषट्पूर्वैवोपोष्येति सर्वसंमतम्॥तृतीय षट्पक्षयोः सर्वैरप्युत्तरा ग्राह्येतिहेमाद्रिः एतद्वैष्णवविषयमितिनिर्णयसिन्धौ ॥ सप्तमाष्टमभेदयोर्गृहस्थैः सकामैश्चपूर्वा ॥ यतिवानप्रस्थविधवानामुत्तरा ॥ अष्टमभेदेविष्णुप्रीतिकामैरुपवासद्वयं कार्यमिति कमलाकरहेमाद्री ॥ नवमपक्षे सर्वैषांपरैव॥ दशमैकादशपक्षयोर्गृहस्थैः पूर्वा यतीनामुत्तरा ॥ द्वादशपक्षे सर्वेषां परैव ॥ त्रयोदशपक्षे निर्णयामृतमाधवयोः सर्वैषांपूर्वा॥मुमुक्षूणांपुत्रवतां परेति निर्णयसिन्धौ ॥ चतुर्दशपक्षे पूर्वैव ॥ ॥ हेमाद्रिमाधवमते सर्वेषां परा ॥ निर्णयामृतमदनरत्ने गृहस्थैःपूर्वा ॥ षोडशपक्षे निर्णयसिन्धौ सर्वेषां पूर्वैव ॥ परेति नि-

र्णयामृते॥ माधवमते गृहिणां पूर्वान्येषां परा॥ सप्तदशपक्षे मोक्षपापक्षयविष्णु प्रीतिकामैर्यतिवानप्रस्थविधवाभिः परा ग्राह्या॥ गृहिणां पूर्वा॥ निर्णयसिन्धौ गृहस्थैर्नक्तं कार्यम् अष्टादशपक्षे सर्वेषा मुत्तरैव॥ वेधसंदेहे ज्योतिर्विद्भिप्रतिपत्तौ परा ग्राह्येति कैश्चिदुक्तम्॥ एतद्वैष्णवविषयमिति कमलाकरः॥ एकादश्यां पितुः श्राद्धे शेषमाजिघ्रेदिति हेमाद्रिः॥ द्वादशी यदाऽल्पा तदा माध्याह्निकीं क्रियामपकृष्य प्रातरेव पारणं कार्यम्॥ प्रदोषादौ जलेन पारयेत्॥ द्वादश्याः प्रथमपादः हरिवासरसंज्ञस्तं वर्जयेत्॥ द्वादशी पक्षद्वये पूर्वा॥ त्रयोदशी शुक्ला पूर्वा कृष्णा परा॥ चतुर्दशी कृष्णा पूर्वा

सिता परा ॥ उपवासे द्वयोः परेति मदन रत्नः ॥ शिवरात्रिव्रते बहुरात्रव्यापिनी ग्राह्येति हेमाद्रिः ॥ साम्ये पूर्वा ॥ निर्णय सिन्धौ प्रदोषनिशीथव्याप्ता ॥ प्रदोषव्यापिनीति निर्णयामृते ॥ अमा पूर्णिमा तुलादानपितृदेवप्रीत्यर्थे उपवासादौ परा श्राद्धे अमा साग्निकैस्त्रेधा विभक्तदिनस्य मध्यभागोऽपराह्णस्तद्व्यापिनी ग्राह्या ॥ दिनद्वयेऽपराह्ने सत्त्वे पूर्वा ॥ अपराह्णव्याप्त्यभावेंशतो व्याप्तौ च तिथिक्षये पूर्वेति हेमाद्रिः ॥ दिनद्वये अपराह्णव्याप्त्यादौ त्रिमुहूर्ता चेत्पूर्वा ॥ निराग्निकैस्तु कुतुपकालव्यापिनी ग्राह्या ॥ अपराह्णव्यापिनी सर्वेषां मुख्या ॥ तिथिसाम्ये सति वृद्धौ परा ॥ क्षये पूर्वा ॥ वैषम्येधि-

का दिनद्वयेअपराह्णस्पर्शे कुतुपव्यापि-
नीति माधवः॥ दिनद्वये कुतुपव्याप्तौ
परा॥ कुतुपस्तु पञ्चदशधा विभक्तदिन-
स्याष्टमो भागः॥ यागकालस्तु पर्वणश्च-
तुर्थभागः॥ प्रतिपदाद्यभागत्रयं च तत्र
मध्याह्नेतत्पूर्वं वा पर्वप्रतिपदोः सन्धौ
तदहर्यागः॥ अत्राह्नो द्वेधा विभागः॥
मध्याह्ना दूर्ध्वं संधौ परेह्नि याग इति
माधवः॥ हेमाद्रिमते परदिने प्रतिपच्चतु-
र्थचरणेऽपिकार्यं इतिमाधवः॥ एतत्पूर्णि
मापरमिति निर्णयसिन्धौ॥ संगवादूर्ध्वं
मध्याह्नात्प्राग्यदा संधिः॥ सा पौर्णिमा
सद्यः कालविधौ॥ अमायां विशेषः॥ प्र-
तिपदि सायं द्वितीयायास्त्रिमुहूर्तस्पर्शे
चतुर्दश्यामन्वाधानम्॥ वाजसनीयानां

संधिदिने अन्वाधानं परेह्नि याग इति माधवः ॥ न एतदिति कमलाकरः ॥ तैत्तिरीयाणां चन्द्रदर्शनेपि यागः ॥ एवं स्मार्तस्थालीपाकेपि ॥ पिण्डपितृयज्ञस्तु कात्यायनानां यागदिनात् पूर्वदिने आश्वलायनानां शेषपर्वणि खण्डतिथौ पूर्वाह्णसन्धौ पूर्वदिने केवलं पार्वणं पर्वान्ते स्थालीपाकं कृत्वाऽपराह्णेपि पिण्डपितृयज्ञः ॥ अपराह्णसन्धावन्वाधानोत्तरम् दर्शश्राद्धपिण्डपितृयज्ञयोरेकत्र व्याप्तौ व्यतिषङ्गः ॥ इति सामान्यनिर्णयः ॥

## अथ चैत्रः ।

चैत्रमासे सिता प्रतिपदुदयव्यापिनी ग्राह्या ॥ दिनद्वये व्याप्तौ अव्याप्तौ च पूर्वैव चैत्रनवरात्रे तु द्वितीयायुतैव ॥ नित्योत्र

तैलाभ्यङ्गः चैत्रमलमासे सति तस्मिन्नेव संवत्सरा रम्भ इति कमलाकरः॥ मलमासस्यागामिवर्षान्तःपातित्वात् ॥ तृतीया गौरीव्रते मुहूर्तमात्राप्युत्तरा द्वितीयायुता न कार्या ॥ इयं मन्वादिः॥ शुक्लाः पौर्वाह्णिकाः कृष्णा अपराह्णिका इति हेमाद्रिः॥ शुक्ला रामनवमी मध्याह्नव्यापिनी ग्राह्या ॥ दिनद्वये तत्सत्वे असत्वेवापुनर्वसुयुतामपि पूर्वां त्यक्त्वा परा ग्राह्या ॥ चैत्रशुक्लचतुर्दशी कुलधर्मव्रतादौ पूर्वा ग्राह्या॥ रात्रिव्यापिनी ग्राह्येति माधवः ॥ पूर्वदिने सायं त्रिमुहूर्ताभावे परेतिकमलाकरः॥ चैत्रपूर्णिमात्रिमुहूर्तसत्वे पराऽन्यथा पूर्वा इति चैत्रः ॥

## अथ वैशाखः ।

शुक्लतृतीयाक्षय्यतृतीया पूर्वाह्नव्यापिनी ग्राह्या ॥ दिनद्वये तद्व्याप्तौ परैव ॥ गौरीव्रते मुहूर्तमात्रेऽपि परेयं युगादिः॥ माघे पञ्चदशी कृष्णा नभस्ये च त्रयोदशी ॥ तृतीया माधवे शुक्ला नवम्यूर्जे युगादयः एताः पूर्वाह्निका ग्राह्याः ॥ उदयव्यापिन्य इति स्मृत्यर्थसारः ॥ दिनद्वये तत्सत्त्वे परेति हेमाद्रिः ॥ निर्णयामृतकालादर्शौ श्राद्धादौ अपराह्नव्यापिन्य इति द्वौ आहतुः ॥ इयं परशुरामजयन्ती प्रदोषव्यापिनी ग्राह्या ॥ दिनद्वये सत्वे परा ॥ शुक्लचतुर्दशी नृसिंहजयन्ती प्रदोषव्यापिनी ग्राह्या ॥ समव्याप्तौ परा ॥

उभयत्र सत्वासत्वयोः परैव ॥ असम व्याप्तौ अधिकत्वाद्ग्राह्या ॥

## अथ ज्येष्ठः।

पूर्णिमा सावित्रीव्रते पूर्वविद्धा ग्राह्या ॥ अष्टादशघटिका यदा चतुर्दशी तदा परे तिमाधवः॥कमलाकरेनैतत्सापि पूर्वेति॥

## अथ आषाढः।

आषाढशुक्लद्वादश्यां मैत्रयोगरहितायां पारणं कुर्यात् ॥ असंभवे मैत्रस्य प्रथम पादंत्यजेत्।अस्यां विष्णोः स्वप्नमहोत्स वः॥चातुर्मास्यव्रतारम्भः एकादश्यांद्वा दश्यांवा॥आषाढपौर्णमासी सायाह्नव्या पिनीग्राह्याकोकिलाव्रते ॥ इयमेवव्या सपूजोक्ता॥तत्रत्रिमुहूर्तमात्रापेत्परैव॥

## अथ श्रावणः ।

शुक्लतृतीयायां कुमारीणां मासमात्रं गौरीपूजोक्ता ॥ तत्र परविद्धा रामकौतुके मुहूर्तमात्रापि परा ॥ अत्रैव चतुर्थ्यां कुमारीभिरेकविंशतिग्रन्थिभिर्युतसूत्ररूपो गणेशः पूज्यः ॥ अत्र त्रिमुहूर्ता चेत्परैव ॥ पञ्चमी नागपूजादौ परा ॥ आषाढकार्तिकमार्गशीर्षपञ्चम्योऽपि ॥ शुक्लचतुर्दश्यां पवित्रारोपणे पूर्वा ग्राह्या ॥ चैत्रचतुर्दशीवत् ॥ अत्रैव श्रवणर्क्षे उपाकर्म ॥ धनिष्ठायुक्तं श्रवणं ग्राह्यम् ॥ उत्तराषाढाविद्धं न ग्राह्यम् ॥ पूर्वेद्युरुत्तराषाढायोगे परेद्युः श्रवणाभावे घटिद्वयन्यूने वा हस्तयुतपञ्चम्यादौ कार्यम् ॥ पर्वणि ग्रहणे चतुर्दश्यां श्रवणे

कार्य मेव ॥ संक्रान्तिदोषे पञ्चम्याम् ॥ तैत्तिरीयकाः उदयव्यापिन्यां पौर्णमास्यां कुर्युः ॥ कात्यायनादीनां तु दिनद्वये पूर्वाह्नव्याप्ता ॥ एकदेशस्पर्शेवा पूर्वैवेतिहेमाद्रिः॥निर्णयामृतेस- र्वयजुःशाखिनामौदयिकमेव पूर्वेत्युक्तत्वात् ॥ रामकौतुके पूर्वा ॥ नूतनानाम् अस्मिन्कर्मणि अभ्यङ्गो वृद्धिश्राद्धंच नित्यम् ॥ अकरणे प्रत्यवायादुपाकर्मोत्सर्जने नित्यं कार्यं ॥ रामकौतुके कुलधर्मादौ पवित्रारोपणादौ पूर्वैव ॥ अस्यां भद्रारहितायां रक्षाबन्धनम् विहितम् ॥ श्रवणाकर्माणि अस्तमययोगिनीग्राह्या॥ श्रावणकृष्णतृतीया कज्जलीसंज्ञा परा ग्राह्या ॥ अत्र चतुर्थी बहुलासंज्ञा चन्द्रो

दयव्यापिनी ग्राह्येति ॥ दिनद्वये सत्वे परा ॥ श्रावणकृष्णसप्तमी शीतलाव्रते पूर्वा ॥ श्रावणकृष्णाष्टमी अर्धरात्रव्यापिनी ग्राह्या ॥ उभयेद्युः निशीथयोगे तदभावेपरैव ॥रोहिणीयोगे नेयंजयन्ती सा चतुर्धा ॥ पूर्वेद्युरेव निशीथे रोहिणी युता तदा पूर्वा ॥ परेद्युरेव चेत्परा ॥ उभयेद्युर्निशीथे रोहिणीयुता चेत्परैव॥पूर्वेद्युरष्टमी निशीथे परेद्युः रोहिणीतदामाधवमते परा॥हेमाद्रौ पूर्वा उपवासद्वयमाह कमलाकरः॥पूर्वेद्यूरोहिणी परदिनेष्टमी तदापरा ॥ उभयपिनेष्टमी रोहिणीनिशीथासंबद्धे परा ॥ इयं बुधसोमयुता फलदा ॥ संभवे तिथ्यृक्षभेदे पारणं कुर्यात् ॥

तिथ्यन्ते नक्षत्रान्ते वेति रात्रावपि पारणं कुर्यात्।निशीथे सार्धप्रहरे वा नक्षत्रं तदा उपवास एव ॥ श्रावण्यमास्यायां कुशग्रहणम् ॥ ॥ ६ ॥ ॥ ॥

## अथ भाद्रपदः ।

तृतीया शुद्धपक्षे हरितालिकाव्रते परैव मुहूर्तमात्रापि॥चतुर्थी वरदगणपतिपूजनेमध्याह्नव्यापिनी ग्राह्या ॥ उभयसत्वे पूर्वा असत्त्वे परैव॥पञ्चमीऋषिव्रते हेमाद्रिमते परा॥माधवमते पूर्वा॥इयंमध्याह्नव्यापिनी इति रामकौतुके॥ऋष्युदयकाले रात्रौ पूजाविधानाद्रात्रियोगिनी ग्राह्या सप्तमी मुक्ताभरणव्रते पूर्वा ग्राह्या विद्धैव ग्राह्या॥भाद्रपदशुक्लाष्टमी दूर्वाख्यापूर्वा

ग्राह्या इयमेव ज्येष्ठापूजने ज्येष्ठायोग वशेन पूर्वा परावा ॥ दिनद्वययोगे परा॥ दाक्षिणात्यास्तु ऋक्ष एव कुर्वन्ति ॥ भाद्रपदशुक्लद्वादश्यां श्रवणयोगरहिता यां पारणं कार्यम् ॥ अपरिहा यैं योगे मध्यमा नाडीस्त्यजेत् नक्षत्र स्य ॥ एकादशी श्रवणयुता द्वादशीयो गे विष्णुशृङ्खलयोग इति हेमाद्रिः ॥ निर्णयामृते श्रवणैकादशी द्वादशीयोगे एव नान्यथेति निशीथानन्तरं सूर्योद यावधि कलामात्रमपि विष्णवृक्षं तदापूर्वै व ॥ स्मृत्यर्थसारे उदयव्यापिनी ग्रा ह्येति ॥ दिनद्वये उदययोगे पूर्वा ॥ एकादश्यामेव श्रवणं न द्वादश्यां तदा

पूर्वा ॥ द्वादश्येवर्क्षयुता तदा परा ॥ कमलाकरस्तूपवासद्वयमवदत् ॥ हेमाद्रिस्तु एकादशीं उपोष्येत्याह ॥ भाद्रपदशुक्लचतुर्दशी अनन्तव्रते त्रिमुहूर्ताप्यौदयिकी ग्राह्येति माधव आह ॥ घटीमात्रापीति निर्णयामृते ॥ दिनद्वये औदयिकत्वे पूर्वा ॥ ॥ ॥

## अथाश्विनः ।

प्रतिपन्मातामहश्राद्धे सङ्गवव्यापिनी ग्राह्या ॥ प्रातःसङ्गवयोर्मध्ये इति केचित् ॥ एतस्य निर्मूलत्वादपराह्ण इत्यपि केचित् ॥ अत्रैव नवरात्रारम्भः ॥ त्रिमुहूर्ता चेत्परैवामावास्याविद्धा निषिद्धा ॥ उभयदिने उभयव्यापित्वे पूर्वा परदिने प्रतिपदात्यन्तासत्त्वे आमायुक्तापि पूर्वैव

प्रतिपदः पूर्वाः षोडश नाड्यो निषिद्धाः चित्रावैधृतिश्च॥असंभवे अनयोः प्रथमा ङ्घ्रिर्वर्ज्यः॥ नत्वमायुक्तग्रहणम् ॥ कलश स्थापनंरात्रौ न कार्यम्॥इदमारब्धं सूत केपि कार्यम् ॥ अनारब्धे पूजाद्यन्येन कारयेत् ॥ अत्र नवरात्राशक्तौ सप्तम्या दित्रिरात्रं कुर्यात् ॥ तत्र षष्ठीयुता पूर्वा ग्राह्या ॥ अत्र शुक्लपञ्चमी ललिताव्रते पूर्वविद्धा रात्रिस्था ग्राह्येति हेमाद्रिकम लाकरौ ॥ माधवनिर्णयामृतयोरपि सा मान्यनिर्णये चतुर्थीयुक्ता मध्याह्ने ग्राह्ये त्युक्तम् ॥ अत्र कर्मकालः मध्याह्नः अप राह्णः रात्रिश्च ॥ आश्विनशुक्लपक्षे मूला द्यपादे सरस्वतीपूजनम् ॥ श्रवणाद्ये वि सर्जनम् ॥ अष्टमी नाडीमात्राप्यौदयि

कीति कमलाकरः ॥ परेह्नि अष्टम्यभावे सप्तमीविद्धा ग्राह्या ॥ अत्रोपवासः पुत्रवतां निषिद्धः ॥ नवमी पूर्वयुता ग्राह्या ॥ सायं त्रिमुहूर्तवेधाभावे निषिद्धापि बलिदानेपरा ॥ पारणं तु दशम्यां विधेयमितिनिर्णयसिन्धौ ॥ नवम्यांकार्यामिति निर्णयदीपः ॥ विजयादशमी प्रदोषव्यापिनी ग्राह्येति दिनद्वये पराह्णव्यापी पूर्वा ॥ दिनद्वये प्रदोषव्यपित्वे परा॥ परदिने पराह्णे सत्वे परैव ॥ अत्रैव श्रवणे ग्रहणम् ॥ आश्विनपौर्णमास्याम् आश्वयुजीकर्म ॥ अत्रैव निशीथव्यापिन्यां कोजागरव्रतम् ॥ कृष्णद्वादशीवत्सपूजने प्रदोषकाले ॥ दिनद्वये तत्सत्वे पूर्वा ॥ कृष्णचतुर्दशी अभ्यङ्गे चन्द्रोद-

यकाले ॥ दिनद्वये चतुर्दशी चन्द्रोदय सत्वे वा अरुणोदये संपूर्णे वा दिनद्वये तदा पूर्वैव ॥ चतुर्दशी चतुर्थयामारुणोदयचन्द्रोदयानामुत्तरोत्तरस्य व्याप्यत्वाद्गुरुत्वम् । अत्र कृष्णचतुर्दश्यां जीवत्पितृकोपि यमतर्पणं कुर्यात् ॥ तच्चाप सव्येनोपवीतिना वा ॥ आश्विनामायां प्रातरभ्यङ्गं कुर्यात् ॥

## अथ कार्तिकः ।

शुद्धप्रतिपद्बलिपूजने पूर्वविद्धा ग्राह्या गोक्रीडादौ सायाह्नव्यापिनी ग्राह्या ॥ दिनद्वये सत्वे परा ॥ असत्वे पूर्वैव ॥ चन्द्रोदयनिषेधाच्चन्द्रोदयदर्शने सा न ग्राह्या ॥ नारीनीराजनमङ्गलमालिकेतु

उदये घटीमात्रापि द्वितीयायुताकार्या॥ पूर्वविद्धा निषिद्धा॥ प्रतिपदि द्यूतक्रीडनं कार्यम् ॥ यमद्वितीया प्रतिपद्युता ग्राह्येति निर्णयामृतः ॥ मध्याह्नव्यापिनीति हेमाद्रिः ॥ उभयदिने मध्याह्नव्यापित्वेतदभावेपरेति रामकौतुकः॥अस्यां स्वगृहे न भोक्तव्यम्॥भगिनीहस्ताद्भोजनमावश्यकम् ॥ कार्तिकशुक्लैकादशीमारभ्य भीष्मपञ्चकम्॥ अत्रैवद्वादश्यांरेवतीयोगरहितायां पारणं कार्यम्॥ अपरिहार्ययोगेचतुर्थचरणस्त्याज्यःअत्रैवदेवोत्थापनमहोत्सवःसायम् ॥ शुक्लचतुर्दशी वैकुण्ठाख्या ॥ सा निशीथव्यापिनी ग्राह्या ॥ दिनद्वये तद्व्याप्तौ निशीथप्रदोषोभयव्यापिनी ग्राह्या ॥ अत्रैव कार्तिकव्र

तोद्यापनम् ॥ मिथुनब्राह्मणभोजनादि पौर्णमास्याम् ॥ पौर्णमासी त्रिपुरोत्सवे सायाह्नप्रदोषव्यापि ग्राह्या ॥ कार्तिकेकालाष्टमीकृष्णाष्टमी सा बहुरात्रव्यापिनी ग्राह्या ॥ द्विदिनं रात्रिव्याप्त्योत्तरा न्यूने पूर्वा ॥ ॥ ॥ ॥

## अथ मार्गशीर्षः ।

शुक्लपञ्चमी नागपूजने षष्ठीयुता ग्राह्या ॥ षष्ठी चम्पाख्या उत्तरा ॥ शततारा रविवासरयोगेन पूर्वा परा वा ॥

## अथ पौषः ।

पूर्णिमा त्रिमुहूर्ता चेत् परा ॥ ॥

## अथ माघः ।

माघशुक्लसप्तमी रथसप्तमीसाऽरुणो

दयव्यापिनीग्राह्या। दिनद्वयेऽव्याप्तावव्या
प्तौ पूर्वैव॥ अत्रैवाष्टम्यां भीष्मतर्पणम्॥
जीवत्पितृकाणामपि सव्येनापसव्येना
पितृकाणाम्॥अत्रकृष्णचतुर्दशी शिवरा
त्रिः॥ अत्र प्रदोषव्यापित्वं निशीथव्यापि
त्वं चप्रयोजकम् ॥ निशीथश्चद्वितीयया
मान्त्यतृतीययामादिमध्यवर्तिघटी द्वयं
ग्राह्या इति माधवः ॥ प्रदोषश्चतुर्नाड्या
त्मको ग्राह्य इति निर्णयामृतः ॥ पूर्वे
द्युरेवोभयव्याप्तौ पूर्वः ॥ उभयदिने
निशीथव्याप्तौ पूर्वेति हेमाद्रिः ॥ परेति
माधवनिर्णयामृतौ॥कमलाकरोप्येवम्॥
परेद्युरर्धरात्रैकदेशव्याप्तौ पूर्वेद्युःसंपूर्ण
व्याप्तौ पूर्वा ॥ परेद्युः प्रदोषव्याप्तौ

पूर्वेद्युर्निशीथव्याप्तौ पूर्वैव ॥ परेति निर्णयामृतः ॥ यदापूर्वेद्युर्निशीथानन्तरं प्रवृत्तापरेद्युरर्वाङ्निवृत्ता तदा प्रदोषव्यापित्वात्परा दिनद्वये प्रदोषव्याप्तौ पूर्वा ॥ दिनद्वये प्रदोषेऽव्याप्तौ पूर्वा ॥ निर्णयामृतस्तु परेत्याह ॥ यथासंभवं तिथ्यन्ते पारणं चतुर्दश्या च ॥ यामत्रयाधिक्ये तिथिमध्य एव पारणम् ॥ दीपिकायां तु रात्रावपि तिथ्यन्त एव ॥ ॥

अथ फाल्गुनः ।

पूर्णिमा सायाह्नव्यापिनी ग्राह्या ॥ प्रदोषव्यापिनी वा ॥ सा च पूर्वविद्धा ॥ दिनद्वये प्रदोषव्याप्तौ परा ॥ उभयदिने तदभावे परेति निर्णयामृतः ॥ भद्रायाः

पूर्वदिने संपूर्णत्वात्॥ अन्ये तु भद्रामुखं त्यक्त्वा पूर्वदिन एव होलिकेति जगुः॥ कमलाकरोप्येवम् ॥ सति संभवे भद्रा वर्ज्या ॥ अन्यथा मुखमात्रं वर्जयेत् ॥ यदि पूर्वरात्रिर्भद्रा व्याप्ता उत्तरदिने प्रदोषे ग्रहणं तदाग्रहणोत्तरं स्नात्वा होम इति कमलाकरः ॥ फाल्गुनकृष्णप्रतिपदि स्वयं चाण्डालं स्पृष्ट्वा स्नायात् ॥ विभूतिं वन्दयेत् ॥ शेषतिथीनां विशेषो निर्णयः सामान्यनिर्णयवत्सर्वत्र ॥ ॥

## अथ ग्रहणम् ।

सूर्यग्रहणं यस्मिन्यामेततःचतुर्यामं पूर्ववेधः व्रत अशनं निषिद्धम् ॥ चन्द्रग्रहणे यामत्रयम् ॥ बालवृद्धातुराणां पूर्व

याममात्रम् ॥ ग्रस्तास्ते उपवासः मुक्तिं दृष्ट्वाऽश्नीयात् ॥ पुत्रवता वेधे प्रहरद्वयं हित्वा अशनं विधेयं नोपवास इति हेमाद्रिः ॥ सोपि नाश्नीयादिति माधव॥ग्रस्यमाने स्नानं ग्रस्ते होमः मुच्यमाने दानम्॥रजस्वलाप्युद्धृतवारिणा स्नायात्॥ रात्रावपि अशौचेपि श्राद्धमिति कमलाकरः ॥ प्रत्याब्दिकमामश्राद्धं कार्यम् ॥ ग्रहणश्राद्धे न दर्शसिद्धिः १ मेषे प्रागूर्ध्वं घटीपुण्याः १० वृषे पूर्वाः १६ मिथुने पराः १६ कर्के पूर्वाः ३० सिंहे पूर्वाः १६ कन्यायां पराः १६ तुलायां प्रागूर्ध्वाः १० वृश्चिके पराः १६ धनुषि पराः १६ मकरे हेमाद्रौ पराः ४० माधवे पराः २० कु

म्भे पूर्वाः १६ मीने पराः १६ सायं संक्रा
न्तौ यासां परतः पुण्यं तासां पूर्वं ॥ य
त्प्रागुक्तःप्रातः संक्रान्तौ तासामुदयोत्तरे
निशीथादर्वाक् चेत्तदा पूर्वदिने पुण्यका
लः ॥ निशीथात्परसंक्रान्तौ तदा परैव ॥
निशीथ एव चेद्दिनद्वयम् ॥ यदा सूर्या
स्तात्पूर्वसमये कर्कमकरसंक्रान्ति
स्तदा हेमाद्रिमाधवमते पूर्वं पुण्यं रात्रौ
प्रदोषे निशीथे वा मकरसंक्रमे माधव
मते द्वितीयदिने पुण्यकालः ॥ हेमाद्रि
स्मृत्यर्थसारे निशीथात्पूर्वं पश्चात्संक्रा
न्तौ दिनान्ते दिनोदये क्रमेण पञ्च पञ्च
नाड्यःपुण्याः॥निर्णयसिन्धौप्रदोषेऽर्धरा
त्रेवामकरसंक्रान्तौ परदिने प्रातःपञ्च ना

ड्यः पुण्याः ॥ निशीथानन्तरम् अर्कोदयं यावत् कर्कसंक्रान्तौ दिनान्ते पञ्च नाड्यः पूर्वं पुण्यकालः ॥ ॥ इति श्री राघवकृतौ तिथिनिर्णयोद्धारः ॥ ॥ ॥

## अथ समुद्रस्नानविधिः ।

श्रीगणेशाय नमः ॥ तत्प्रकारस्तु ॥ आश्वलायनः ॥ समुद्रे पर्वसु स्नायादमायांच विशेषतः । पापैर्विमुच्यते सर्वैरमायां स्नानमाचरन् ॥ भृगौ भौमदिने स्नानं नित्यमेव विवर्जयेत् । भारते अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन । अश्वत्थं मन्दवारे तु सागरं पर्वणि स्पृशेत् ॥ पृथ्वीचन्द्रोदये स्कान्दे ॥ पुनाति पर्वणि स्नानात्तर्पणैः सरितां पतिः ।

कदाचिदपिनैवात्र स्नानं कुर्यादपर्वणि॥
अस्यापवादस्तत्रैव प्रभासखण्डे पर्व
काले च संप्राप्ते नदीनां च समागमे ।
सेतुबन्धे तथा सिन्धौ तीर्थेष्वन्येषु संयु
तः ॥ एवमादिषु सर्वेषु मध्येन्ये तु स्व
कर्मणि । तथा ॥ विना मन्त्रं विना पर्व
क्षुरकर्म विना नरैः। कुशाग्रेणापि देवेशि
न स्प्रष्टव्यो महोदधिः ॥ तथा न काल
नियमः सेतौ समुद्रस्नानकर्मणि तद्वि
धिश्च तत्रैव ॥ पिप्पलादसमुत्पन्ने कृत्ये
लोकभयं करे । पाषाणस्ते मया दत्त
आहारार्थं प्रकल्पताम् ॥ इति पाषाणं
प्रक्षिप्य ॥ विश्वाची च घृताची च विश्व
योने विशांपते । सान्निध्यं कुरु मे देव

सागरे लवणाम्भसि ॥ नमस्ते विश्व
गुप्ताय नमो विष्णो अपांपते । नमो जल
धिरूपाय नदीनां पतये नमः ॥ समस्तज
गदाधारशङ्खचक्रगदाधर । देव देहि ममा
नुज्ञां तव तीर्थनिषेवणे ॥ त्रितत्त्वात्मक
मीशानं नमो विष्णुमुमापतिम् । सान्नि
ध्यं कुरु देवेश सागरे लवणाम्भसि ॥
अग्निश्च योनिरनिलश्च देहो रेतोधा वि
ष्णुरमृतस्य नाभिः । एतद्बुवन्पाण्डवस
त्यवाक्यं ततोऽवगाहेत पतिं नदीनाम् ॥
इति भारतोक्तमन्त्रान् पठित्वा विधिव
त्स्नात्वा ॥ सर्वरत्नो भवाञ्छ्रीमान् सर्व
रत्नाकरो यतः । सर्वरत्नाकरो नस्त्वं

गृहाणार्घ्यं महोदधे ॥ इत्यर्घ्यं दत्त्वा तर्पयेत् ॥ यथोक्तं पृथ्वीचन्द्रोदये स्कान्दे ॥ पिप्पलादं विकर्णं च कृतान्तं जीवकेश्वरम्। वसिष्ठं वामदेवं च पराशरमुमापतिम् ॥ वाल्मीकिं नारदं चैव वालखिल्यांस्तथैव च। नलं नीलं गवाक्षं च गवयं गन्धमादनम् ॥ जाम्बवन्तं हनूमन्तं सुग्रीवं चाङ्गदं तथा । मैन्दं च द्विविदं चैव ऋषभं शरभं तथा ॥ रामं च लक्ष्मणं चैव सीतां चैव यशस्विनीम्। एतांस्तु तर्पयेद्विद्वान् जलमध्ये विशेषतः॥ आब्रह्मस्तम्बपर्यन्तं यत्किंचित्सचरा

चरम् । मया दत्तेन तोयेन तृप्तिमेवाभि गच्छतु ॥ ॥ ॥ ॥ ॥

इति समुद्रस्नानविधिः समाप्तः ।

इति निर्णयोद्धारः संपूर्णः ।

---

पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" छापाखाना-बम्बई.